'दल विदारणे' (भ्वा० प० से०)। घञ् (३।३।१८)। दालेन निर्वृत्तः। 'भावप्रत्ययान्तादिमप्' (वा० ४।३।२०)। डलयोरेकत्वम् ॥

इति त्रिलिङ्गसंग्रहः ॥

**परलिङ्गं स्वप्रधाने द्वन्द्वे, तत्पुरुषेऽपि तत् ॥४२॥**

स्वे समस्यमानाः पदार्थाः प्रधानं यत्र तस्मिन्नितरेतरयोगद्वन्द्वे परपदस्य लिङ्गम्। कुक्कुटमयूर्यौ, मयूरीकुक्कुटौ ॥*॥ तत् परलिङ्गम्। कुलब्राह्मणः, ब्राह्मणकुलम्। अर्धपिप्पली। 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' (२।४।२६) ॥

अस्यापवादमाह—

**अर्थान्ताः प्राद्यलंप्राप्तापन्नपूर्वाः परोपगाः ।**
**तद्धितार्थे द्विगुः संख्यासर्वनामतदन्तकाः ॥४३॥**

अर्थोऽन्ते येषां ते। प्राद्यादि पूर्वे येषां ते परं विशेष्यमुपगच्छन्ति विशेष्यलिङ्गाः। द्विजार्था माला, द्विजार्थः सूपः। द्विजार्थं पयः। 'अर्थेन नित्यसमासः सर्वलिङ्गता च' (वा० २।१।३६) ॥*॥ आचार्यं प्रगतः=प्राचार्यः। 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' (वा० २।२।१८) इति समासः। खट्वामतिक्रान्ता। पूर्ववत्। यत्तु मुकुटेन 'प्रगत आचार्योऽस्याः' इति विग्रहप्रदर्शनं कृतम्। यच्च 'अतिखट्वः' इत्यत्र 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः' (वा० २।२।२४) इति वार्तिकमुपन्यस्तम्। तच्चिन्त्यम्, उभयोरपि बहुव्रीहिविषयत्वात्। अत्र च तत्पुरुषत्वात्। बहुव्रीहौ तु 'बहुव्रीहिरदिग्नाम्नाम्' इत्यनेन गतार्थत्वाच्च ॥ * ॥ एवम् प्राप्तजीविकः आपन्नजीविकः। अलं जीविकायै–अलंजीविकः, अस्मादेव ज्ञापकात्समासः ॥*॥ तद्धितार्थे यो द्विगुः स वाच्यलिङ्गः। पञ्चसु कपालेषु संस्कृतः पञ्चकपालः, पञ्चकपाला। 'संख्यापूर्वो द्विगुः' (२।१।५२)। 'संस्कृतं भक्षाः' (४।२।१६) इत्यण्। 'द्विगोर्लुगनपत्ये' (४।१।८८) इत्यणो लुक् ॥*॥ संख्या सर्वनामानि च संख्यासर्वनामान्ताश्च शब्दा वाच्यलिङ्गाः। एकः, एका, एकम्। द्वौ, द्वे २। त्रयः, तिस्रः, त्रीणि। चत्वारः, चतस्रः, चत्वारि। बहवः, बह्व्यः, बहूनि। सर्वः, सर्वा, सर्वम् इत्यादि। ऊनत्रयः, ऊनतिस्रः, ऊनत्रीणि। परमसर्वः, परमसर्वा, परमसर्वम्॥*॥

**बहुव्रीहिरदिग्नाम्नामुन्नेयं तदुदाहृतम् ।**
**गुणद्रव्यक्रियायोगोपाधयः परगामिनः ॥ ४४ ॥**

बहुव्रीहिसमासो वाच्यलिङ्गः स्यात्। बहुधनः, बहुधना, बहुधनम्। 'अदिग्नाम्नाम्' इति किम्। उत्तरपूर्वा। 'दिङ्नामान्यन्तराले' (२।२।२६) इति बहुव्रीहिः ॥*॥ गुणद्रव्यक्रियाणां योग उपाधिर्निमित्तं येषां ते। शुक्ला शाटी शुक्लः पटः, शुक्लं वस्त्रम्। दण्डी, दण्डिनी, दण्डि। पाचिका, पाचकः, पाचकम् ॥

**कृतः कर्तर्यसंज्ञायां कृत्याः कर्तरि कर्मणि ।**
**अणाद्यन्तास्तेन रक्ताद्यर्थे नानार्थभेदकाः ॥४५॥**

'कर्तरि कृत्' (३।४।६७) इत्यादिना विहिताः। असंज्ञायां किम्। 'संज्ञायां भृतॄ–' (३।२।४६) इति विहिता वाच्यलिङ्गा न। कर्ता, कर्त्री, कर्तृ। कुम्भकारः, कुम्भकारी, कुम्भकारम्। संज्ञायां धनंजयः ॥*॥ कृत्याः कर्तरि भव्यः, भव्या, भव्यम्। 'भव्यगेय–' (३।४।६८) इति कर्तरि यत्। कर्मणि ण्यत्। कार्यः, कार्या, कार्यम्। कर्तरीत्यादि किम्। भवितव्यम्। असंज्ञायामित्येव। भिद्यो नदः, उध्यः ॥*॥ 'तेन रक्तं रागात्' (४।२।१) इत्याद्यर्थे विहिता ये अणादयस्तदन्ताः शब्दा नानार्थानां भेदका विशेषणानि। नानार्था वा भेदका विशेष्या येषां ते वाच्यलिङ्गाः स्युः। कौङ्कुमं वस्त्रम्, कौङ्कुमी शाटी, कौङ्कुमः पटः। लाक्षिकी शाटी, लाक्षिकं वस्त्रम् कृत्तिकाभिर्युक्ता कार्तिकी। वसिष्ठेन दृष्टं वासिष्ठं साम, वसिष्ठेन दृष्टो मन्त्रः वासिष्ठः, वासिष्ठी ऋक्। प्रजापतिना प्रोक्तः प्राजापत्यः ॥

**षट्संज्ञकास्त्रिषु समा युष्मदस्मत्तिङव्ययम् ।**
**परं विरोधे, शेषं तु ज्ञेयं शिष्टप्रयोगतः ॥ ४६ ॥**

'ष्णान्ता षट्' (१।१।२४) 'डति च' (१।१।२५) इति सूत्राभ्यां कृतषट्संज्ञाः युष्मदस्मदी, तिङन्तम् अव्ययानि च त्रिषु लिङ्गेषु समा लिङ्गकृतविशेषाभावात्। 'त्रिषु' इत्यधिकारे 'त्रिषु समाः' इति वचनं लिङ्गसंबन्धाभावेन समानत्वप्रतिपादनार्थम्। पूर्वं हि लिङ्गवत्त्वं प्रतिपादितम्। पञ्च नराः, पञ्च नार्यः पञ्च फलानि। षट् स्त्रियः, षट् नराः, षट् कुलानि। कति घटाः, कति स्त्रियः, कतिगृहाणि। त्वं स्त्री, त्वं पुरुषः, त्वं फलम्। एवम् अहं स्त्री,

अहं पुरुषः, अहं फलम् । पुरुषः पचति, स्त्री पचति, कुलं पचति । उच्चैः प्रासादः, उच्चैः शाला, उच्चैर्गृहम् । यत्तु मुकुटः—षट्संज्ञकस्यापि संख्यान्तर्गतत्वादेव त्रिलिङ्गत्वे लब्धे 'संख्यासर्वनामतदन्तकाः' इत्यस्यैवायं प्रपञ्चः— इत्याह । तन्न । डत्यन्तानां संख्यान्तर्गतत्वाभावात् । तेषां संख्याकार्यनिर्वाहाय पाणिनिना स्वशास्त्रे संख्यासंज्ञा विहिता, न तु सकलसाधारण्येन । किं च संख्यासर्वनाम्नां लिङ्गत्रययोगः प्रतिपाद्यते, षट्संज्ञानां तु लिङ्गत्रयराहित्यमतः कथं तेनास्य गतार्थता । 'लिङ्गकृतविशेषरहिताः' इत्यर्थः—इति स्वयमेव व्याख्यातम् । नहीदं संख्यादिषु संभवति, इति कथं गतार्थता ॥*॥ लिङ्गविधायकवचनविरोधे सति परं वचनं ग्राह्यम् । यद्वा 'स्त्रियामीदूद्विरामैकाच्' इत्यस्यावकाशः—धीः, भ्रूः । 'कृतः कर्तर्यसंज्ञायाम्' इत्यस्यावकाशः—कर्ता, पाचकः । नीः, लूः, इत्यादावुभयप्रसङ्गे परत्वात्त्रिलिङ्गता भवति । मुकुटस्तु— 'असुरपर्यायाः पुंस्त्वे' इत्यस्य विषयः—नैर्ऋतः, राक्षसः । 'द्व्यच्कमसिसुसन्नन्तं क्लीबे' इत्यस्य विषयः—ओजः, यशः । इहोभयं प्राप्नोति—रक्षः । परत्वात्तु क्लीबम्—इत्युदाजहार । तन्न । 'विशेषैर्यद्यबाधितः' इत्यनेन गतार्थत्वात् । 'असुरपर्यायाः पुंस्त्वे' इत्यस्य 'यातुरक्षसी' इति निर्देशस्यैवापवादत्वात् । उत्सर्गापवादभिन्ने विरोधप्रदर्शनस्यौचित्यात् ॥*॥ शेषमिहानुक्तं शिष्टानां प्रयोगाज्ज्ञातव्यम् यथा—'चालनी तितउः पुमान्' इत्युक्तम् । इह तितउ परिपवनं भवति' इति (पस्पशा) भाष्यप्रयोगान्नपुंसकमपि बोध्यम् । तथा 'ताटङ्कस्ते' इत्याचार्यप्रयोगात्ताटङ्कशब्दस्य पुंस्त्वम् । यथा वा 'कलिका कोरकः पुमान्' इतीहोक्तम् । 'कोरकाणि' इति माघप्रयोगान्नपुंसकत्वमपि । यत्तु 'गोधापोटा' इत्युदाहृतवान्मुकुटः, तन्न । 'ङ्याबूङन्तम्' इत्युक्तत्वेन शेषत्वाभावात् ॥

इति लिङ्गादिसंग्रहवर्गविवरणम् ॥

**इत्यमरसिंहकृतौ नामलिङ्गानुशासने ।**
**सामान्यकाण्डस्तृतीयः साङ्ग एव समर्थितः ॥**

इति श्रीवघेलवंशोद्भवश्रीमहीधरविषयाधिपश्रीकीर्तिसिंहदेवाज्ञया श्रीभट्टोजिदीक्षितात्मजश्रीभानुजीदीक्षितविरचितायाममरटीकायां व्याख्यासुधाख्यायां तृतीयः काण्डः समाप्तिमगात् ॥



॥ श्रीः ॥

# अमरमूलस्थशब्दानामकारादिक्रमेण

# शब्दानुक्रमणिका ।

८

इति मूलशब्दानुक्रमणिका ।

॥ श्रीः ॥

# अथ टीकाटिप्पणीस्थशब्दानामकारादिक्रमेण

# शब्दानुक्रमणिका ।

इति टीकाटिप्पणीस्थशब्दानुक्रमणिका ।